जामाआ । भाआ ॥ पक्षे कत्तारो । पिआरो । जामाअरो । भाअरो ॥५।११॥

औ इति । सम्बुद्धौ तु परे ऋतोऽद्वा स्यात् । हे कत्त । हे दाअ । हे पिअ । हे माअ । पक्षे—हे कत्तार । हे दाआर । हे पिअर । हे भाअर ।

अरमिति । अस्य औ अरं इत्यादेशः । हे पिअरं । पक्षे—हे पिअ ॥ हे पिअर । हे पिअरा ॥ ५

उद्दतामिति ॥ सि-अम्-औ एतद्वर्जेषु स्यादिषु परतः ऋत उद् वा स्यात् ॥ जस्-कत्तू । कत्तुणो । कत्तउ । कत्तओ । कत्तवो ।

शसि ॥ कत्तू । कत्तुणो ॥

टा—कत्तुणा ॥

भिस्—कत्तूहिं । कत्तूहिँ ॥ १०

ङसि—कत्तुत्तो । कत्तूदो २ । कत्तूदु २ । कत्तूहिन्तो । कत्तूहि । कत्तू ॥

एतान्येव । सुन्तोधिकानि लुग्वर्जानि भ्यसि ॥

ङस्—कत्तुणो । कत्तुस्स ।

आम्—कत्तूण । कत्तूणँ ।

ङि—कत्तुम्मि ॥ १५

सुप्—कत्तूसु । कत्तूसु ॥

पक्षे आरादौ कत्तारो । पिअरो । इत्यादि ॥

एव पिउणो = पितु । जामाउणो [ = जामातुः ] । भाउणो [ = भ्रातु ] ॥ पिउणो [ = पितृणाम् ] इत्याद्यपि ॥

अस्यमौषु किम् । सि—पिआ [ = पिता ] ॥ कत्ता [ = कर्त्ता ] ॥ अम्— २० पिअर [=पितरम् ] ॥ कत्तारं [=कर्त्तारम् ] ॥ औ—पिअरा । कत्तारा । [पितरौ । कर्त्तारौ ] ॥५।११॥

२४६ मातुर्जनन्यामाईउ देवतार्थे त्वरा भवेत् ।
वात्सर्वादेर्ङेसिमामो ङेस्तु स्सि-म्मि-त्थ-हिं ततः ॥
किंयत्तदिदमेतद्भ्योदन्तेभ्यष्टा तु वा ङिणा ॥५।१२॥ २५

मातुरिति ॥ जनन्यर्थस्य मातुर्ऋतः स्यादौ परे आ-ई-ऊ-इति त्रय स्युः । माआ । माई । माऊ । [ = माता ] ॥ माआउ । माआओ । माअं । पक्षे माआरा माअरं । इत्यादि ॥

माईआ । माऊआ । माईए । माऊए ॥

देवेति । देवतार्थाभिधो मातुर्ऋतः अरा इत्यादेशः स्यात् । नमो माअराण । ३०

स्यादावित्येव ॥ माइलणो । माइदेवो ॥

सर्व्वादेः । सव्वो । हे सव्वो । हे सव्वा । हे सव्व । बलि तु सव्वे । अण्णे । जे । ते । के । कअरे । इअरे । एक्के । एए । इति सिद्धरूपाश्रयादेव सिद्धम् ॥ तेन सर्वादेर्डेर्जसः इति नारम्यते अपवादाभावे उत्सर्गस्यैवाव्याप्यत्वात् ।

शसो डे । सव्वे । जे । ते । के । सव्वेण । जेण । सव्वेहिं । सव्वेहिँ । जेहिं । जेहिँ । तेहिँ । तेहिं ॥

चतुर्थ्याः षष्ठी । सव्वस्स । जस्स । कस्स ॥

वात् इति । अवर्णान्तात्सर्वादेरामो डेसिं इत्यादेशो वा स्यात् ॥ सव्वेसिं [=सर्वस्मिन्] । अण्णेसिं [=अन्यस्मिन्] । जेसिं [=यस्मिन्] केसिं [=कस्मिन् । पक्षे सव्वाण-सर्वेषाम्] । जाण [=येषाम्] । काण [=केषाम्] । तपरत्वाभावात् स्त्रियामपि ॥

सव्वेसिं [=सर्वस्याम्] । अण्णेसिं [=अन्यस्याम्] । सर्वासाम् । अन्यासाम् इत्यर्थः ॥

ङसेस्तोदो । सव्वत्तो । अण्णत्तो । सव्वाओ इत्यादि । भ्यस्यपि प्राग्वत् । षष्ठी सूक्ता ॥

डेस्त्विति ॥ अवर्णान्तात् सर्व्वादे परस्य डे एते चत्वारः स्युः । सव्वस्सिं । सव्वम्मि । सव्वत्थ । सव्वहिं । अण्णस्सिं । अण्णम्मि । अण्णत्थ । अण्णहिं ॥

किंयत्तद्भ्यः स्त्रियामपि । पक्षे काए । कीए । जीए । जाए । ताए । तीए ॥

आवीपौ निरङ्कुशौ इत्यावीपौ किमः । क । को । के ॥ क । के ॥

किं यदिति ॥ किणा । केण [=केन] ॥ जिणा । जेण [=येन] ॥ तिणा । तेण [=तेन] ॥ इमिणा । इमेण [=अनेन] ॥ एदिणा । एदेण [=एतेन] ॥ भिसि-केहिं । जेहिं । तेहिं ।

चतुर्थ्या षष्ठी ॥५।१२॥

२४७ किंयत्तद्भ्यो ङसो वासः स्सा से वा स्त इदन्ततः ।
किंतद्भ्यां डास डेसिंणा-आमो म्हा वा यदो ङसेः ॥५।१३॥

किंयदिति । एभ्यो ङसः स्थाने आस इत्यादेशो वा स्यात् ॥ पक्षे स्स ॥ कास । कस्स [=कस्य] ॥ जास । जस्स [=यस्य] ॥ तास । तस्स [=तस्य] ॥

स्त्रियामाकृत्तादपि । कस्याः=कास । [यस्याः=] जास ॥ [तस्याः=] तास ॥ पक्षे काए । जाए । ताए ॥

स्सा इति । इदन्तेभ्यस्तु किमादिभ्यो ङसः स्सा-से इत्यादेशौ वा स्तः । आवीपौ निरङ्कुशौ इति ईप्पक्षे ह्रस्वस्तु कुक्मरः ॥ संयोगे ह्रस्वता । किस्सा । तीसे । तीअ । तीआ । तीए । तीइ ॥

किंतदिति ॥ कास । केसिं । काण ॥ तास । तेसिं । ताण ॥ किंतद्भ्यां किम् । जेसिं । इमेसिं ॥

म्हा इति ॥ अम्हा । पक्षे जाओ । जाउ । इत्यादि ॥५।१३॥

२४८ किमो ङसेर्डिणो स-म्हा वा डोम्हा तदोपि वा ।
किंयत्तद्भ्यस्तु ङेः काले डाहे डाला इआ च वा ॥५॥१४॥ ५

किमो इति । पक्षे तो-दो-प्रभृतय । किणो । कीस । कम्हा । कत्तो । कादो इत्यादि ॥ तो । तो । त ॥

डोम्हा इति । तदः परस्य ङसे. डो-म्हा इत्येतावपि वा स्तः । पक्षे दो-प्रभृति ॥ तो । तम्हा । ताओ । ताओ तउ ॥

किंयदिति ॥ पक्षे हिं-स्सिं-म्मि-त्था । कस्मिन् काले-काहे । काला । कइआ । १० कहिं । कस्सिं । कम्मि । कत्थ ॥ जाहे । जाला । जइआ [ = यस्मिन् ] । ताहे । ताला । तइआ ॥ [ =तस्मिन् ] ॥

ताला जाअंति गुणा जाला ते सहिअएहिं घेप्पंति ।
रविकिरणाणुग्गहिआइँ होन्ति कमलाइं कमलाइं ॥
[ =तदा जायन्ते गुणा यदा ते सखीभिर्गृह्यन्ते । १५
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥ ] ॥५।१४॥

२४९ स्यादौ तदस्तु णः क्वापि किमः कस्त्र-तसादिषु ।
स्यादाविदमिमः सौ वा पुंस्ययं चेमिआ स्त्रियाम् ॥५।१५॥

स्यादाविति ॥ क्वापि यथालक्ष्यम् ॥ णं पेच्छ=तं पश्येत्यर्थः ॥ स्त्रियामपि ॥ हंतु नामिअमुही णं तिअडा = हन्तुं नामितमुखी तं त्रिजटा ॥ णेण भणिअं = तेन २० भणितम् ॥ णए=तया । णेहिं कअं = तैः [ कृतम् ] ॥ णाहिं कअं = ताभिः [ कृतम् ] ॥

किमः इति ॥ कत्थ= कुत्र । तस्—कओ । कत्तो । कदो = कुतः ॥ स्यादौ तु संस्कृतवत् सिद्धम् ॥ को । के । कं ॥

स्यादाविति । इदम्-शब्द इम-रूपमापद्यते स्यादौ परे । इमो । इमा [इमे]= २५ अयम् । इदम् । इमम् ॥

सौ वा इति । इदमः सौ परे पुंसि अयम् इति आदेशो वा । स्त्रियां तु सौ इमिआ इत्यादेशो वा स्यात् ॥ अहवायं कअकज्जो=अथवायं कृतकार्यः । इमिआ वाणिअधूआ = [ इयं वणिग्दुहिता ] । पक्षे—इमो राओ [ अयं राजा ] ॥ इमा अम्हणी [ =इयं ब्राह्मणी] ॥ इमे चिट्ठंति [= इमे तिष्ठन्ति] ॥ इमाओ । इमाउ । ३० इमाओ जुवइओ = [ इमाः ] युवतयः ॥५।१५॥

२५० स्यमूभ्यां सहेदमः क्लीबे स्यादिदं इणमो इणं ।
द्वयोरिमेणं णमिमं शष्टाभिस्त्विमेणे च ॥५।१६॥

स्यमिति । इमापवादः । इदं वणं [=इदं वनम् ] । इणमो राअकुलं [ इदं राजकुलम् ] इणं घरं [ = इदं गृहं ] चिट्ठति पेक्ख वा [ तिष्ठति प्रेक्षस्व वा ] ॥

५ द्वयोरिति ॥ स्त्रीपुंसयोरिदमो इमा सह अम् एते स्यु. ॥ इणं णं इमं वा पेक्ख ॥

शस् इति ॥ शसाद्यन्तस्येदम. इमेणे एतौ स्त. ॥ णं पेच्छ । इमे वा णेण कअं । इमेण वा णेहिं कअ । इमेहिं वा [ = एभि. कृतम् ॥५।१६॥

२५१ भिस्सुप्-स्सास्सिषु वा अस्य ङसाम्भ्यां वास्य से-सिमौ ।
ङ्यन्तस्य त्विह न त्थो ङेः हिं च नास्येदमेतदोः ॥५।१७॥

१० भिसिति ॥ त् इत् । एहि । आहि । पक्षे णेहि । इमेहि ॥

ङसेति । ङसा अमा च सहितस्येदम क्रमात्से-सिं इत्यादेशौ स्त । से गुणा तस्येत्यर्थ ॥ सिं सील = एषामित्यर्थ ॥

केचिदामापि सह से-आदेशमाहु स्त्रियामपि ॥ पक्षे अस्स । इमस्स । इमेसिं । इमाणं ॥

१५ ङ्यन्तेति । सप्तम्येकवचनान्तस्य इदम इह आदेशो वा स्यात् । इह संस्कृत-समम् । पक्षे इमस्सिं ॥

न त्थो इति । इदमो ङेः स्थाने ङेस्तु-स्सि-म्मि-त्थ-हि-त्त इति प्राप्तः त्थो न स्यात् ॥

हिं चेति । अनयोर्ङे स्थाने हिं-आदेशश्च न स्यात् । तेन इदम स्सि-म्मि

२० एव । अस्सि । इमस्सि । इमम्मि । एसु । इमेसु ॥५।१७॥

२५२ सिना सहैतदोक्लीबे स्यादिमो इणमो इण ।
वदैतदोश्च वा स्यातां ङसाभ्या सह से-सिमौ ॥५।१८॥

सिना इति । इणमो राआ [ = अयम् राजा ] । इण [ = अयम् ] । सैषयोर्वा इति वा डो ॥ एसो । एसो संस्कृतवदेव । एस इति सिद्धे एसादेशकरण

२५ क्लीबार्थम् । एस सिर [ = एतत् शिर ] ॥

स्त्रियामपि । पक्षे आपोभावार्थे च (?) । सवस्स वि एस गई [ सर्वस्यापि एषा गति ] । सव्वाण वि पत्थिवाण एस मही [ = सर्वेषामपि पार्थिवानामेषा मही ] ॥ पक्षे संस्कृतवत् । एषा चउरिआ [ = एषा चतुरिका ॥ एसो पुरिसो [ = एष पुरुषः ] । एस राउल [ = एतद् राजकुलम् ] ॥

३० तदेतदोस्तस्य सोऽक्लीबे सत्विति तु नास्त्यत्र तदो स. सावन्त्ययोः इति संस्कृतवदेव सिद्धेः ॥ क्लीबे तु सोर्लुका लुप्तत्वात् सत्वं न भविष्यति ।

जसि—एए धण्णा [ = एते धन्याः ] ॥ एआओ महिलाओ [=एता महिला. ] ॥

एआइँ वणाइँ [ एतानि वनानि ॥

अमि । एदं । एअ एदं । [ एतम् ] ॥

शसि । एए [ = एतान् ] ॥

टायाम् । किंयत्तदिदमेतद्भ्योऽन्त्येऽथष्टा तु वा डिणा इति डिणा वा ॥
एदिणा । एदेण [ एतेन ] ॥ भिसि-एदेहिं । एएहिं । [ = एभि ] ॥ 5

चतुर्थ्यां षष्ठी ॥

तदेतेति ॥ एतयोराभ्या सह क्रमात् से-सिं एतौ वा स्त । सेअ हिअं=एतस्य
हितम् इत्यर्थ । पक्षे एअस्स । एएसिं राअणं = एतेषां राज्ञाम् ॥५।१८॥

२५३ वैतदो ङसिना एत्तो एत्ताहे त्थे त-शब्द-लुक् ।
म्मौ त्वेरदीद्वा काले ङेस्त्वेत्ताहे एकतस्त्विआ ॥५।१९॥ १०

वैतदो इति । ङसिना सहैतद एतावादेशौ वा स्त ॥ [ एतस्मात् ग्रामात् =]
एत्तो गामादो ॥ एत्ताहे वा । पक्षे एआओ । एआउ । एआहिन्तो । एआहिं ।
एआ ॥ भ्यसि—एअत्तो । एआओ । एआउ । एआहिन्तो । एआहि । एआसुन्तो ॥

षष्ठी तूक्ता ॥

त्थे इति । ङेस्तु स्सिं-म्मि-त्थ-हिं-त्त इति विहते त्थे परे एतदस्त-शब्दस्य १५
लुक् स्यात् ॥ एतस्मिन् इति एत्थ । एअस्सिं । एअम्मि ।

म्मौ इति ॥ एतद एकारस्य अत् ईच्च वा स्तो म्मिशब्दे परे ॥ अअम्मि ।
ईअम्मि । पक्षे एअम्मि ॥

हिं च नास्येदमतदोः [ प्रा च. ५।१७ ] इति हिं न भवति ॥

काले इति । काले वाच्ये ङ्यन्तस्य एतद एत्ताहे इत्यादेशो वा निपात्यते ॥ २०
एतस्मिन्काले एत्ताहे । पक्षे स्सिं-म्मि-त्था ॥

एकेति ॥ एकशब्दात् ङे इआ-आदेश स्यात् । एकस्मिन् = एक्कइआ । पक्षे
एक्कस्सिं । एक्कम्मि । एक्कत्थ । एक्कहिं ॥

[ शेषं सर्ववत् ॥५।१९॥

२५४ वादसोह सिना नान्यत् स्यादौ मुम्मावएअ वा ॥ २५
युष्मदस्तु सिना साकं तुं-तुवं-तं-तुहं-तुमं ॥५।२०॥

वादसो इति । सिना सहितस्यादस अह इत्यादेशो वा स्यात् ॥ तत्र च कृते
सर्गे तो-डो स्त्रियामाप् । क्लीबे स्वम्-स्योरिन्दु-बिन्दू इति एतन्न भवति ॥
[ असौ पुरुषः = ] अह पुरिसो । [असौ युवती = ] अह जुवई ॥ [अद. वनम्=]
अह वणं ॥ असौ=अद. ॥ पक्षे ॥ ३०

स्यादाविति । स्यादौ परे अदसो मु. स्यात् । स्याम्-अल्-शस्-लुक्-हि-सुप्स्वपि

इति दीर्घः ।। अमू पुरिसो । अमू साला । अमुं वणं ।।

शेष गुरुधेनुमधुवत् ।

म्मावे इति । ङ्यादेशे म्मिशब्दे परे अदस अअ इअ इत्यादेशौ वा स्तः ।। अमुष्मिन् इति अअम्मि । इअम्मि । पक्षे अमुम्मि । संग्रहश्च ।।

५ सौ अह अमू जसि अमुणो अमओ अमुवो

अमवो अमुउ अमूओ । अमुणो अमू ।।

स्त्रिया तु—अमू । अमूउ । अमूओ ।।

अमि-अमुं ।।

शसि-अमुणो । अमू ।।

१० स्त्रियां तु—अमूओ । अमूउ । अमू ।।

टायाम्—अमुणा ।

स्त्रियां तु—अमूअ । अमूआ । अमूए । अमूइ । अमूहिं । अमूहिँ ।।

ङस् टावत् ।

अमूण । अमूणँ ।

१५ ङसिरपि टावत् । पक्षे अमुत्तो । अमूओ । अमूउ । अमूहिन्तो ।।

भ्यसि—अमूसुन्तो इत्यधिकम् ।

ङस्—अमुणो । अमुस्स । अमूण ।

ङि—अअम्मि । इअम्मि । अमुम्मि । अमूसु ।।

युष्मद इति ।। अस्य एते पञ्चादेशा स्यु । त तुव तु तुह तुमं

२० दिट्ठो ।।५।२०।।

२५५ तुज्झे-तुम्हे-तुम्ह-तुब्भे-तुब्भ च भे जसा ।
तुए तुमे-तुमं-तं-तुं-तुव-तुह , भवेदमा ।।५।२१।।

तुज्झ इति । जसा सहितस्य युष्मद एते अष्टौ स्यु. । तुज्झे राआणो । तुम्हे । तुम्ह । तुब्भे । तुब्भ । चोनुक्तसमुच्चयार्थ. । तेन तुम्हे । ते भे यूयमित्यर्थ ।।

२५ तुए इति ।। अमा सहितस्य सप्तैते स्यु. ।। तुए वन्दामि । [ = त्वा वन्दे ] तुमे तुमं तु तं तुवं तुह त्वामित्यर्थ ।।५।२१।।

२५६ वो-तुब्भ-तुब्भे-तुय्हे-भे-उय्हे-तुम्मे-तुम्हे-शसा ।
भे-दे-दि-ते-तइ-तए-तुमए-तुमाइ कार्यास्तुमे तुमइ
टासहिते तुमं च ।।५।२२।।

३० वो इति ।। शसा सहितस्यैते अष्टौ स्यु । वो पेच्छामि । युष्मान् पश्यामि । तुब्भ-तुब्भे तुय्हे भे उय्हे तुय्हे तुम्हे युष्मान् इत्यर्थं ।।

मे-दे इति । टासहिता एते आदेशाः स्युः ॥ मे मणियं । दे दि ते तइ तए तुमए तुमाइ तुमे तुमइ तुमं त्वयेत्यर्थः ॥५।२२॥

२५७ तुब्भेहि तुज्झेहि तुम्हेहि तम्हेहयुब्भेहि-उम्हेहि-तुअं भिसा ते ।
तइ-तुव-तुम-तुह-तुब्भास्तुब्भस्तुम्हश्च जायतेऽस्य ङसौ ॥५।२३॥

तुब्भेहीति । भिसा सहितस्य युष्मदोऽष्टौ आदेशाः स्युः । तुब्भेहि मन्तिअं । तुज्झेहि । तुम्हेहि । तम्हेहि । उब्भेहि । उम्हेहि । तुअ । ते । युष्माभिर्मन्त्रित-मित्यर्थः ॥ ५

तइ इति । ङसौ परेऽस्य युष्मद सप्तैते स्यु. ॥ ङसेस्तु यथाप्राप्ताः त्तो-दो-प्रभृतय स्यु. । पक्षे तहित्तो प्रभृतयश्चत्वारो ङसिना सहितस्य स्यु । तइत्तो । तईदो । दन्तलोपे तईओ । तईदु । तईउ । तईहिन्तो ॥ १०

नादन्तादेरिति हिलुकोरभाव । एवं तुवादेरपि ऊह्यम् ॥ वलोपे तुअत्तो । ङस्यन्तस्यादेशपक्षे तु तहित्तो । तुब्भे । तुज्झ । तुम्ह । त्वदित्यर्थः ॥ ङस्यन्तस्य आदेशपक्षे तुहित्तो ॥५।२३॥

२५८ तुब्भस्तुज्झश्च तुम्हश्चेति भ्यसीह चत्वारः ।
प्रागुक्तास्त्तोदो दु-हि-हिन्तो-सुन्तो भ्यसोपि संयोज्याः ॥५।२४॥ १५

तुब्भेति । पञ्चम्या भ्यसि परे युष्मद स्तुब्भादय. स्यु । भ्यसश्च स्थाने त्तो-दो प्रभृतय सामान्येनोक्ता आदेशा प्रयोक्तव्या इति सौकर्यार्थं स्मार्यन्ते ॥ तुब्भत्तो । तुज्झत्तो । तुम्हत्तो । तुय्हत्तो ॥ एव दो-द्वादिष्वपि तुब्भादो इत्याद्युदाहार्यम् ॥५।२४॥

२५९ ङसा तइ-तु-ते-तुम्ह-तुहं-तुह-तुमे-तुम । २०
तुमाइ-तुव-तुब्भोब्भोम्हो-म्ह-तुज्झ-दे-देइए ॥५।२५॥

ङसा इति । ङसा सहितस्य युष्मद एकोनविंशतिरेते स्यु. ॥ [तव धनम् =] तइ धणं । तु ते तुम्ह तुहं तुह तुमे तुमे तुमाइ तुव तुब्भ उब्भ उब्भ उम्ह तुज्झ दि देइए तवेत्यर्थः ॥५।२५॥

२६० तुब्भाण-तुम्हाण-तुवाण-तुब्भं तुम्हं च तुज्झं तुमाण तुब्भं । २५
तुज्झाण-उम्हाण-उहाण-भे-वो तु-तुज्झ-तुम्हाः सहितस्य
आमा ॥५।२६॥

तुब्भाणेति । आमा सहितस्यैते षोडश स्युः । तुब्भाण कलहो । तुम्हाण तुवाण तुब्भ तुम्ह तुज्झ तुमाण तुब्भ तुज्झाण उम्हाण उहाण भे वो तु तुज्झ तुम्ह युष्माकमित्यर्थः ॥ ३०

टामोणेऽस्य इति पक्षे बिन्दु ॥ तुब्भाणं । तुम्हाणं । तुवाणं । तुज्झाणं ।

तुमाणं उम्हाणं तुहाणं—एवं त्रयोविंशतिः रूपाणि ॥५।२६॥

२६१ तुमे तुमाइ तुमए तए तइ ङिना सह।
तुब्भ-तुम्हौ तुज्झ-तुवौ तु-तुमौ तुह ङौ परे ॥५।२७॥

तुमे इति। ङिना सहितस्य पञ्चैते स्युः॥ तुमे ठिअं। तुमाइ तुमए तए
५ तइ। त्वयि [ स्थितम् ] इत्यर्थः॥

तुब्भेति। युष्मदो ङौ परे एते सप्त स्युः। ङेस्तु यथाप्राप्तं म्मि-प्रभृति॥
तुब्भम्मि। तुम्हम्मि। तुज्झम्मि। तुवम्मि। तुम्मि। तुमम्मि। तुहम्मि। पक्षे
तुब्भे इत्यादि ॥५।२७॥

२६२ सुप्येषे तु-तुव-तुब्भ-तुज्झ-तुम्हान्तिमस्य वैत्।
१० सिना सहास्मदोऽहं म्मि अम्म्यम्हि अहयं अहं ॥५।२८॥

सुप्यपि परे एते तुब्भादयः स्युः॥ एतेषु च परेषु अत सुभिस्सुपो. इत्युक्त-
मेत्वं वा स्यात्। तुब्भादित्रयाणां त्वमन्तस्यात्वं च वा स्यात्॥ तुब्भसु। तुब्भेसु
तुम्हसु तुम्हेसु तुज्झसु। तुज्झेसु॥ आत्वपक्षे तुब्भासु। तुज्झासु। तुम्हासु॥
तुवासु। तुवसु। तुवेसु॥ एवं परेषामपि॥

१५ सिनेति। सिना सहितस्यास्मद एते षडादेशाः स्यु। हे अम्हणो अम्मि
अम्मि अम्हि म्हि अहय अहं ॥५।२८॥

२६३ जसा सह त्वम्ह-अम्हे-अम्हो मे भो वयन्तथा।
ममं मिममहं मं मि णेणं मम्हाम्हम-अम्म्यमा ॥५।२९॥

जसेति॥ जसा सहितस्यैते षट् स्यु। अम्ह भणामो। अम्हे अम्हो भो
२० मे वयं॥

ममम् इति। अमासहितस्यैते दश आदेशाः स्युः। मम पेच्छ। मिम।
अहं। मं। मि। णेणं। मम्हा। अम्ह। अम्मि। मामित्यर्थः ॥५।२९॥

२६४ अम्हे-अम्हो-अम्हणो च चत्वारः स्युः शसा सह॥
ममाइ-ममए-मेमि ममं-मइ-मया-इणो ॥५।३०॥

२५ २६५ मए टान्तस्य अम्हेहि अम्हाहम्हेम्ह-णो भिसा॥
ङसौ मइ-ममौ मज्झमहौ अम्हममौ ङ्यसि ॥५।३१॥

अम्हे इति। अम्हे रक्ख। अम्हो। अम्ह। णे। अस्मान् रक्षेत्यर्थ॥

ममाइ इति॥ टान्तस्यास्मदो नवैते स्युः॥ ममाइ कअं। ममए। मे।
मि। ममं। मइ। मया। इणे। मए। मया [ कृतम् ] इत्यर्थं ॥५।३०॥

३० अम्हे हीति॥ भिसा सहितस्य पञ्चैते स्यु। अम्हेहि कअं। अम्हाहि।
अम्हे। अम्हणो। अस्माभिः [ कृतम् ] इत्यर्थः॥

ङसी इति । पञ्चम्येकवचने ङसौ परे अस्मद एते चत्वारः स्युः ॥ ङसेस्तु यथाप्राप्ताः तोदो प्रभृतयः । मइत्तो गदो । ममत्तो । मज्झत्तो । महत्तो ॥ मत्त इत्यर्थ ॥ एवं दोप्रभृतिष्वप्युदाहार्यम् ॥

अम्हेति ॥ भ्यसि परे एतौ स्त. ॥ भ्यसस्तु यथाप्राप्ताः ॥ अम्हत्तो । ममत्तो । एव दो-दु-हिन्तो हि-सुन्तोष्वप्यूह्यम् ॥५।३१॥ ५

२६६ ङसाम्हाम्हंमज्झमज्झं महं मह च मे मइ ।

आमा सह त्वम्ह अम्हं अम्हे अम्हो महाण च ॥५।३२॥

२६७ अम्हाण-मज्झ-मज्झाण-णो च णे च ममाण च ।

ङिना सह मए मे मि म माइ मइ पञ्चकम् ॥५।३३॥

ङसा इति । षष्ठ्येकवचनेन सहितस्यास्मद एते अष्टौ स्युः । चकार उक्तस- १० मुच्चयार्थः । तेन मम इत्यपि । अम्ह धण । अम्हं मज्झ मज्झ मह मह मे मइ= मम [ धनम् ] इत्यर्थ ॥

आमा इति । अम्ह सुओ [ = मम सुतः ] ॥ अम्हं अम्हे अम्हो महाण अम्हाण मज्झ मज्झाण णो णे ममाण [ = अस्माकमित्यर्थ ] ॥

टामोर्णस्य इति बिन्दुपक्षे ममाण ॥ १५

महाणं अम्हाणं मज्झाणं एव पञ्चदश रूपाणि ॥

ङिनेति ॥ मए ठिअ [ = मयि स्थितम् ] । मे मि म माइ मइ मयी- त्यर्थः ॥५।३२-३॥

२६८ मह मज्झ ममाम्हा ङौ सुप्येद्वा म्हस्य अत्व वा ॥

अन आणः पुंसि वा सौ त्वाद्वा नित्यं तु-जश्-शसोः ॥५।३४॥ २०

महेति । ङौ तु परे अस्मद एते चत्वार स्युः । ङेस्तु यथाप्राप्ता ॥ महम्मि ठिअं [ = मयि स्थितम् ] ॥ मज्झम्मि । ममम्मि । अम्हम्मि ॥ पक्षे महे मज्झे ममे अम्हे ॥

सुप्येद्वेति ॥ सुपि च परे अस्मदो महादयः स्युः । तेषु च कृतेषु अत एभिस्सुपि' इति प्राप्तमेत्वं च वा स्यात् । महेसु । महसु । मज्झेसु । मज्झसु । २५ ममेसु । ममसु ॥

अम्हेति ॥ सुपि परे अस्मदादेशस्य अम्ह-शब्दस्य आत्व च वा स्यात् ॥ अम्हासु । अम्हेसु । अम्हसु ॥

अन इति । अकारान्तस्य-शब्दस्य आण इत्यादेशो वा स्यात् । अदन्तत्वात्सर्गे तोडो इत्यादि कार्यम् ॥ ब्रह्मन् - बम्हाणो । हे बम्हाण । हे बम्हाणा ॥ असि ३० बम्हाणा । बम्हाणं । बम्हाणो । बम्हणेण बम्हाणेण । बम्हाणेहिं । बम्हाणेहि । बम्हाणत्तो । बम्हाणाओ । बम्हाणाउ । बम्हाणाहिन्तो । बम्हाणाहिं । बम्हाणा ॥

भ्यस्यपि—बम्हाणेहिन्तो । बम्हाणेसुन्तो । बम्हाणेहि । पुत्वाभावे बम्हाणहिन्तो इत्यादि ॥ बम्हाणस्स । बम्हाणाण । बम्हाणम्मि । बम्हाणो । बम्हाणेसुं बम्हासु ॥ एवं युवन्मघवन्श्वादयः ॥

पुंसि किम् । शर्मन् = सम्म । [ कर्मन् =] कम्मं ॥ आणाभावपक्षे ॥

५ सौ इति ॥ अन सौ परे आत्व वा स्यात् । डोपवाद । सिलोपः । बम्हा । पक्षे डो । बम्हो ॥

निव्यमिति ॥ अनयोरन. परयो आत्वं नित्य स्यात् ॥ बम्हा चिट्ठति ॥५।१४॥

२६९ जश् शस्-ङसि-ङसां स्थाने णो वा टायास्तु णा स्मृतः ।
णो-णा-ङौ राइ राज्ञो वा अमाम्भ्यां राइण च वा ॥५।१५॥

१० जसिति । एषां स्थाने णो वा स्यात् । आत्वम् । बम्हाणो चिट्ठन्ति । बम्हाणो पेच्छ [=ब्राह्मणा. तिष्ठन्ति । ब्राह्मणान् प्रेक्षस्व ] ॥ अमि सिद्धरूपाश्रयेण बम्हाण । बम्हाणो । बम्हे । बम्हा [ = ब्राह्मणम् ] ॥

टाया इति ॥ अनन्तात्परस्य टाप्रत्ययस्य णा-आदेश । बम्हणा । [=ब्रह्मणा] ॥ राअणा [ = राज्ञा ] ॥ बम्हेहिं । बम्हेहि [ ब्रह्मभिः ॥ बम्हणो [ = ब्रह्मण ] ॥

१५ बम्हत्तो । बम्हाओ । बम्हाउ । बम्हाहिन्तो । बम्हाहि । बम्हा [ब्रह्मण ] ॥ भ्यस्यपि तद्वत् ॥ बम्हासुन्तो = [ ब्रह्मभ्य ] ॥ ब्रह्मणो । बम्हणस्स [ = ब्रह्मण ] ॥ बम्हाणं [=ब्रह्मणाम् ] ॥ बम्हम्मि [ = ब्रह्मणि] । बम्हेसु । बम्हेसु [=ब्रह्मसु ] ॥

एव जुवा [ = युवा ] ॥ जुवाणो । जुवाण । [ अर्वा = ] अव्वा ॥ अव्वाणो ॥ उच्छा । उच्छाणो ॥ पूसा । पूसाणो ॥ तक्खा । तक्खाणो । श्वन्-सा ।

२० साणो [ = श्वा । श्वानः ] । सुकम्मा । सुकम्माणो [ = सुकर्मा । सुकर्माणः ] ॥ गावा । गावाणो [ = ग्रावा । ग्रावाण ] ॥ राजन्-राआणो । राआण । हे राआणा । अदन्तत्वाद्ग्रामवद्रूपम् ॥ आणाभावपक्षे सौ त्वाद्वा । हे राआ । हे राअ [ = हे राजन् ] ॥

जसि—णोणा इति ॥ राज्ञो राइ इत्यादेशो वा स्यात् णो-णा-ङिषु परेषु ॥

२५ राइणो । पक्षे राआणो । राआ ॥

अमामिति ॥ अमा आमा च सहितस्य राज्ञो राइणं इत्यादेशो वा स्यात् ॥ राइणा पेच्छ [ = राजान प्रेक्षस्व ] ॥ पक्षे राअ । शसि राए । राआ ॥५।१५॥

२७० रण्ण् णाणोष्टा-ङसि-ङस्सु राई वा भिस्भ्यसाम्-सुपि ॥
आत्मनः स्यादप्प-अत्त टाया वा णइ-आणि आ ॥५।१६॥

३० रणिति । टादिष्वादेशयो· णाणो इत्येतयो. परतो राज्ञो रण्ण् इत्या-देशो वा ॥ रण्णा । राणा । राइणा । राएण । राआणेण = [राज्ञा] ॥

राई इति। भिसादिषु चतुर्षु परतो राज्ञो राई इत्यादेशो वा स्यात्॥ राईहिं। राईहि [= राजभिः]॥ पक्षे राएहिं राएहि राआणेहिं। राआणेहि॥

चतुर्थी, षष्ठी। [राज्ञो धनम् =] राइणो धण। रण्णो। राअस्स। राआणस्स॥ आमि-[राज्ञां धनम् =] राइण धण। राईण। राआण। राआणाणं॥ राआण॥ 5

ङसौ राइणो। रण्णो। राअओ। रामाउ। राआहिन्तो। राआहि। राआ। राआणत्तो इत्याद्यपि। भ्यसि-राइत्तो राईओ। राईउ। राईहिन्तो। राइहि। राईसुन्तो। पक्षे राअत्तो। राआहिन्तो। राआसुन्तो। राएहिन्तो। राएसुन्तो॥ एव राआणोसुन्तो राआणासुन्तो [= राजभ्यः] इत्याद्यप्यूह्यम्॥

षष्ठी तूक्ता॥ राअम्मि। राइम्मि॥ राआणम्मि। राए। राआणे। राईसु। 10 राएसु। राआणेसु [= राजसु]॥

आत्मेति॥ आत्मन्-शब्दस्य अप्प-अत्त इत्यादेशौ स्याताम्॥ अप्पा। अप्पो॥ हे अप्पा। हे अप्प। जसि-अप्पाणो। अप्पा। अप्पाणा। अप्पाणो। अप्पे। अप्पा। अप्पाणा॥

टाया इति॥ आत्मन परस्य टा इत्यस्यैतौ वा स्त.॥ अप्पणइआ। 15 अप्पणिआ कअ। पक्षे अप्पणा अप्पाणेण। अप्पेहि। अप्पेहिं। अप्पणो। अप्पस्स अप्पाण॥

ङसौ—अप्पणो। अप्पाओ। अप्पाउ। अप्पाहिन्तो। अप्पाहि। अप्पा॥

भ्यस्यप्येवम्॥ विशेषस्तु अप्पासुन्तो॥ हिन्तोसुन्तोहिष्वेत्वविकल्पश्च॥ अप्पम्मि। अप्पेसु। अप्पेसु॥ आणादेशपक्षे तु अप्पाणो। अप्पाणा इत्यादि 20 रामवत्।

एव अत्ता। अत्तो अत्ताणो इत्याद्यप्यूह्यम्॥५।३६॥

[इति सुबन्तसंज्ञक. पञ्चम प्रकाशः]

— ०. —

## षष्ठः प्रकाशः

# अथ संख्या-प्रकाशः

अथ संख्या निरूप्यते ॥

२७१ एकस्मिन्कस्य गत्वद्विर्लोपाः शेषन्तु सर्ववत् ॥
जश्शस्भ्यां सहितस्य द्वे दुवे दो-दोणि-वेण्णि वे ॥६।१॥

एकस्मिन्निति ॥ एगो एक्को एओ ॥ हे एगो । हे एग । हे एगा । हे एआ । हे एक्को । हे इक्को ॥

५ जसि सर्व्वादित्वात्-एगे । एग । एगे । एगा । एगेण । एगेणं । एगेहि । एगेहिं ॥ एगस्स ॥

वास्सर्वादेर्ङसिम्मा.—एगेसिं । एगाण । एगाण । एगत्तो । एगाओ । एगाउ । [ एकस्मात् ] ॥

शौरसेन्यां तु एगादो । एगादु इत्यादि ।

१० ङ्यस्यप्येवम् ऊह्यम् ॥

एगस्सि । एगम्मि । एगत्थ । एगाह । एगेसुं । एगेसु ॥ एव एक—एअयोरपि रूपमुन्नेयम् ॥

द्विशब्दे एकवचनाभाव. ॥ द्विवचनस्य बहुवचनमेव ॥

जसिति । पञ्चैते स्युः ॥ दो । दोण्णि । वेण्णि चिट्ठन्ति पेच्छ वा [ = द्वौ द्वे

१५ वा तिष्ठत प्रेक्षस्व वा ] ॥

बे संयोगे ह्रस्वता इति ह्रस्वत्वे दुण्णि । विण्णि ॥ उच्चारणसामर्थ्यादुभयम् इत्येके । तदेव सप्त रूपाणि ॥६।१॥

२७२ तृतीयादौ तु दो-बे द्व्यादेस्त्वामो ण्ह-ण्हमिष्यते ।
जश्शस्भ्यां सह तिण्णि त्रेस्तृतीयादिषु ती स्मृतः ॥६।२॥

२० तृतीयेति । भिसादेस्तु यथाप्राप्तमादेशः । दोहि । दोहिं । बेहि । बेहिं [ = द्वाभ्याम् ] ॥

द्व्येति । द्व्यादे संख्याया परस्यामो ण्ह-ण्हं इत्यादेशौ स्त. । दोण्ह । दोण्हं । बेण्ह । बेण्हं । ह्रस्वत्वपक्षे दुण्हं । दुण्ह । विण्हं विण्ह उभयमपीष्यते ॥ भ्यसि-दोत्तो-दुत्तो दोओ दोउ ॥

२५ शौरसेन्यां दोदो । दोदु । दोहिन्तो । दोसुन्तो ॥

षष्ठी लुक्‌वा ॥ दोसुं दोसु ॥ एवं बेत्तो । बित्तो । बेओ । बेउ इत्याद्यूह्यम् ॥
त्रिशब्दो बहुवचनान्त एव ॥ जस्शसोरिति ॥
तिण्णि चिट्ठंति । पेच्छ वा ॥ [ = त्रय स्त्रिय. त्रीणि वा तिष्ठन्ति त्रीन् त्रीणि वा प्रेक्षस्व ] ॥
तृतीयेति ॥ भिसो हिः । तीहिं । तीहि ॥ ५
चतुर्थ्याः षष्ठ्याम्—आम्-ण्ह-ण्ह ह्रस्व । तिण्ह । तिण्हं ॥
भ्यसि-तित्तो । तीओ । तीउ ॥
शौरसेन्यां—तीदो । तीदु । तीहिन्तो । तीसुन्तो । षष्ठी लुक्‌वा ॥ तीसुं । तीसु ॥६।२॥

२७३ चतुरशब्दस्य चत्तारि चत्तारो चउरो तथा ॥ १०
दीर्घो वा चतुरोनामि पञ्चादेराशतान्न हेत् ॥६।३॥

चतुरिति । तथेति जस्-शस्भ्यां सहितस्य चतुर एते त्रय. स्युः ॥ चत्तारि चिट्ठन्ति पेच्छ वा । [ = चत्वार चतस्र. चत्वारि तिष्ठन्ति । चतुर. चतस्र चत्वारि प्रेक्षस्व वा] ॥ भिसादिषु लोपोन्त्यहल । क ग च —इति तलोप । भिसो हिः ॥
दीर्घेति ॥ आम्-वर्जेषु स्यादिषु परेषु चतुरोन्त्यस्य दीर्घो वा ॥ चऊहिं । १५
चऊहि । चउहि । चउहिं ॥ चऊहिन्तो । चउहिन्तो । चऊसुन्तो । चउसुन्तो । चऊसु । चऊसु ॥ चऊसु चउसु ॥
अनामि किम् ॥ चउण्ह । चउण्ह ॥
पञ्चादिषु जश्शसो. संस्कृतवच्च ॥
पञ्चेति ॥ अत एभिस्सुपो. इति विहितमेत्व पञ्चादिषु शतपर्यन्तेषु न स्यात् ॥ २०
अनदन्तत्वादेव सिद्धे. पञ्च-षट्-सप्तसु अनुवादोयम् स्पष्टार्थः ॥ दशादौ तु विध्यर्थः ॥ पंचहिं । पंचहि ॥ पंचत्तो । पचाओ । पचाउ । पंचाहिन्तो । पंचासुन्तो ॥ पचण्ह । पचण्ह ॥ पचसुं । पचसु ॥
षट्शब्दस्य छादेशो अन्त्यलोप । छ चिट्ठन्ति पेच्छ वा [ षट् तिष्ठन्ति प्रेक्षस्व वा] ॥ छण्हं । छण्ह ॥ छत्तो । छाओ । छाउ । छासुन्तो ॥ छण्ह । छण्हं । छसु । २५
छसुं ॥
सप्तन्-शब्दस्य लुक्‌वा. इति पलोपे तस्य द्वित्वम् । सत्त चिट्ठन्ति पेच्छ वा + [ = सप्त तिष्ठन्ति प्रेक्षस्व वा ] ॥ सत्तहिं । सत्ताओ । सत्ताउ । सत्ताहिन्तो । सत्तासुन्तो । सत्तण्ह । सत्तण्ह । सत्तसु । सत्तसुं ॥
अष्टनो नलोपे ष्टस्य ठ. । शेषादित्वा द्वित्वम् । अट्ठ चिट्ठन्ति पेच्छ वा ॥ ३०
अट्ठहिं । अट्ठहि ॥ अट्ठण्ह । अट्ठण्ह ॥ अट्ठसु । अट्ठसुं ॥

एव नव ॥६।३॥

२७४ दशनो दह वा प्रायः सख्यादेस्तु रहः स्मृतः।
द्वेर्वा ते त्रयसः पञ्चपञ्चाशद्दशिन पण्णच ॥६।४॥

दशेति ॥ दह । दस ॥ दसमुहो दहमुहो [ = दशमुख ]॥ दहरहो ।
[ = दशरथ ] ॥

दसहिं । दहहिं । दहत्तो । दहाओ । दहादो दहाउ । दहासुन्तो । दहण्ह ।
दहण्हं । दहसु ॥

प्रायोग्रहणात् क्वचिन्न स्यात् ॥ दसमी अवत्था । [ = दशमी अवस्था ] ॥
दससु दिसासु [ = दशसु दिक्षु ] ॥

सख्येति । संख्यापूर्वस्य दशनो रह इत्यादेश स्यात् ॥ एगारह । एआरह ॥
[ = एकादश ] ॥

द्वेर्वेति ॥ पूर्वपदस्य द्विशब्दस्य वा इति पवर्गीयादेश. स्यात् ॥ बारह
चिट्ठन्ति पेक्छ वा ॥

पूर्वपदस्येति बाहुलकाल्लभ्यते ॥

ते इति ॥ पूर्वपदभूतस्य त्रयस् इत्यस्य ते इत्यादेशः स्यात् ॥ तेरह ॥

पञ्चेति । पञ्चन्-शब्दस्य पण्ण इत्यादेशः स्यात्पञ्चाशच्छब्दे दशन्-शब्दे च
परे ॥ पण्णरह । पञ्चदशेत्यर्थ ॥६।४॥

२७५ चतुरश्चो-चउ ततो दशनो हहः सोलहः ॥
स्युर्वीसत्तीसचालीसा विंशत्यादित्रयः क्रमात् ॥६।५॥

चतुरशब्दस्य चो-चउ इत्यादेशौ स्त संख्यायां परपदे ॥ चतुर्शब्दात्परस्य
दशन्-शब्दस्य द्विदकारादिर्दह इत्यादेश. स्यात् ॥ चोद्दह । चउद्दहे ॥

सोलहेति । षोडशेत्यस्य निपातनमेतत् । दशनो रहाभावे दस्य लत्वं
सस्य हत्व षष छत्वाभावश्च निपातनात्सिद्धम् । सोलह राआणो [ षोडश
राजानः ॥ ]

सप्तनः पलोप-तद्वित्वे दशनो रह॰ दशविंश-इत्यात्वं सत्तारह [सप्तदश] ॥
ष्टस्य ट्ठ. । द्वित्वम् । अट्ठारह [ = अष्टादश ] ॥

स्युरिति ॥ विंशतित्रिंशच्चत्वारिंशदित्येषां क्रमात् वीस-तीस चालीस-इत्यादेशा.
स्यु ॥ एओणवीसा । एगोणवीसा । ऊणवीसा ऊनविंशतेः ॥ वीसा=[विंशतिः] ॥
बावीसा [ = द्वाविंशतिः ] । तेवीसा [ = त्रयोविंशतिः ] ॥ चोवीसा । [illegible]
[ = चतुर्विंशतिः ] ॥ पंचवीसा [ = पञ्चविंशतिः] ॥ छव्वीसा [=षड्विंशतिः] ॥
[illegible] इति पलोपे शेषादेश इति तस्य द्वित्वम् । अट्ठावीसा [ अष्टाविंशतिः ] ॥

एओणत्तीसा [ एकोनत्रिंशत् ] । ऊनत्रिंशत् ॥ तीसा = [ त्रिंशत् ] ॥ एकत्तीसा एक्कत्तीसा [ = एकत्रिंशत् ] ॥ द्वात्रिंशत् । द्वेर्बः तीसादेशे कृते ह्रस्वः बत्तीसा ॥ तेत्तीसा [ = त्रयस्त्रिंशत् ] ॥ चोत्तीसा । चउत्तीसा [ = चतुस्त्रिंशत् ] ॥ पंचत्तीसा [ = पञ्चत्रिंशत् ] ॥ छत्तीसा [ = षट्त्रिंशत् ] ॥ सत्तत्तीसा [ = सप्तत्रिंशत् ] ॥ अट्ठत्तीसा [ = अष्टात्रिंशत् ] ॥ ५

बत्तीसातिरिक्तेषु पृथक्पदविवक्षया तकारस्य द्वित्वम् न इत्येके ॥ एओण-चालीसा [ = एकोनचत्वारिंशत् ] ॥ चालीसा [ =चत्वारिंशत् ] ॥ एगचालीसा । एअचालीसा । चलोपोपीत्येके एगआलीसा [ = एकचत्वारिंशत् ॥६।५॥

द्विचत्वारिंशे—

२७६ द्विमुखश्च द्विकृत्वश्च द्विवारं द्विविधो द्विपात् । १०
द्विमात्रं च द्विवचनं द्विजातिश्च द्विवार्षिकः ॥६।६॥

२७७ द्व्यादिः कलः पदः पादश्चत्वारिंशो गुरुर्लघुः ॥
पञ्चाशत्सप्ततिः षष्टिर्नवतिर्द्विसहस्रपात् ॥६।७॥

२७८ सद्विरेफ-द्विजिह्व हस्तादौ-द्वेर्दुरिष्यते ॥
द्विधा-द्वितीय-द्विगुणा-द्विदलेषु तु वा भवेत् । ६।८॥ १५

द्विमुखेति ॥ चलोपः । दुआलीसा [ = द्विचत्वारिंशत् ] । तेआलीसा [ = त्रिचत्वारिंशत् ] । चोआलीसा । चउआलीसा [ = चतुश्चत्वारिंशत् ] ॥ पंच आलीसा [ = पञ्चचत्वारिंशत् ] । छआलीसा [ = षट्चत्वारिंशत् ] ॥ सत्तआलीसा [=सप्तचत्वारिंशत् ] ॥ अट्ठआलीसा [ = अष्टचत्वारिंशत् ] ॥ अष्टाचत्वारिंशेप्येत-देव ॥ दीर्घह्रस्वौ समासेत्वाम् इति वचनात् ॥ २०

एकोनपञ्चाशत् । लोप्योऽन्त्यहल् इति तलोपः । शषो स स्त्रियामाप् ॥ पञ्चः पञ्चाशदस्ति पण्ण च इति पण्णादेशः । एओणपण्णासा [ = एकोनपञ्चाशत् । पण्णासा [ = पञ्चाशत् ] ॥

२७९ दशविंशे सप्तन आ पञ्चाशे त्वेकपञ्चनोः ।
सप्ताष्टनोश्च पञ्चो वा पण्णो दीर्घात्तु पस्य वः ॥६।९॥ २५

दशेति । सप्तनः आत्वं स्याद्दशविंशतिशब्दयोः परयोः । पञ्चाशच्छब्दे तु परे एकपञ्चसप्ताष्टानामात्वं स्यात् ॥

पञ्चो इति । पञ्चाशति परे पञ्चशब्दस्य पण्णादेशो वा स्यात् ॥

दीर्घादिति ॥ दीर्घात्परस्य पण्णादेशस्य पस्य वः स्यात् । एआवण्णा । एआवण्णासा [ एकपञ्चाशत् ] ॥६।९॥ ३०

पञ्चाशतो वा संख्यादेः शस्य लुक् सप्ततौ रितेः ।
संख्यादेः सप्त तेः सस्य हत्वमिच्छन्ति केचन ॥६।१८॥

पञ्चाशेति । बावण्णा सा । द्विपञ्चाशतस्तु दुपण्णासा । दुपण्णा ॥ तेवण्णासा । तेवण्णा ॥ चोवण्णासा । चउवण्णासा । चोवण्णा । चउवण्णा ॥
५ पचावणणासा । पंचावण्णा । पञ्चणवण्णासा । पण्णपण्णा ॥ छप्पण्णासा । छप्पण्णा ॥ सत्तावण्णासा । सत्तावण्णा । अष्टापञ्चाशेप्येवम् ॥ अट्ठावण्णासा । अट्ठावण्णा [ = अष्टापञ्चाशत् ] ॥

षष छः । ष्टस्य ट्ठ. । द्वित्वम् ॥ एओणछट्ठी [ = एकोनषष्टि ] ॥ छट्ठी [ = षष्टि. ] ॥ एक्कछट्ठी [ = एकषष्टि ] ॥ द्विषष्टि = दुछट्ठी ॥ तेछट्ठी
१० [ = त्रिषष्टि. ] ॥ चोछट्ठी । चउछट्ठी [ = चतु·षष्टि. ] ॥ पचछट्ठी [ =पञ्च-षष्टि ] ॥ पंचछट्ठी [ पञ्चषष्टि ] ॥ छच्छट्ठी [ = षट्षष्टि. ] ॥ सत्तछट्ठी [ = सप्तषष्टि· ] ॥ अट्ठछट्ठी [ = अष्टषष्टिः ] ॥

एकोनसप्ततौ—सप्तेति । सप्तति-शब्देतिशब्दस्य रि-आदेश. स्यात् ॥ एओणसत्तरी [ एकोनसप्तति ] ॥ सत्तरी [ = सप्तति ] ॥ एअसत्तरी
१५ [ = एकसप्तति ] ॥ दुसत्तरी । बासत्तरी [ = द्वासप्तति. ] ॥ तेसत्तरी [ = त्रिसप्तति ] ॥ चोसत्तरी । चउसत्तरी [ = चतु·सप्तति ] ॥ अट्ठसत्तरी [ = अष्टसप्तति ] ॥

सख्यादेरिति ॥ तेन एकहत्तरी [ = एकसप्तति. ] । बाहत्तरी [ द्वासप्तति ] इत्याद्युदाहरन्ति ॥

२० अशीतेः सत्वे क ग च—इति तलोपे वोद्वृत्ते इति नित्यम् इकारयो सन्धौ सवर्णे एगासी [ एकाशीति ] । बासी [ द्वयशीति ] दीर्घह्रस्वौ समासेचाम् इति अकारस्य दीर्घ ॥ तिआसी [ = त्र्यशीति ] । चोआसी । चउआसी [=चतुर-शीति ] ॥ पंचासी [ = पञ्चाशीतिः ] ॥ छासी [=षडशीति ] ॥ सत्तासी [=सप्ताशीति ] ॥ अट्ठासी [=अष्टाशीति ] ॥

२५ एओणणवई [=एकोननवतिः ] ॥ णवई [ = नवति. ] ॥ नवतेस्तलोपे अन्येषां स्यास्-जस्-शस्-लुक् हि सु···· ·इति दीर्घ. ॥ दीर्घह्रस्वौ समासेचाम् इति पूर्वपदान्तस्य दीर्घ. ॥ एगाणणवई । एक्काणवई [ एकनवति ] ॥ बाणवई [ द्विनवति ] ॥ तेणवई [त्रिणवति ] ॥ चोणवई ॥ पंचाणवई [=पञ्चनवतिः ] ॥ छाणवई [ = षण्णवतिः ] ॥ सत्ताणवई [ = सप्तनवति. ] ॥ अट्ठाणवई
३० [=अष्टानवति ] ॥ एओणसअ [ = एकोनशतम् ] ॥ सअं [ = शतम् ॥

शतस्य तलोपे वनवद्रूपम् ॥ एव सहस्रादेरप्यूह्यम् ॥६।१०॥

२८१ इह सामान्यतः सिद्धा अपि केचिन्निपातिताः ॥
निपातनप्रसिद्धाश्च विशेषेणोपलक्षिताः ॥६।१०॥
२८२ सकृदुक्तौ मन्दधिया सन्देहो मा स्म भूदिति ॥
सामान्यतः सिद्धमपि पर्यायेण समुच्चितम् ॥६।११॥
२८३ निपातनेषु पर्याय-सौकर्यप्रतिपत्तये ॥ ५
एवमुच्चावचमिह समाधेयं सुधीवरैः ॥६।१५॥
[ इति सख्यासज्ञक षष्ठ प्रकाश ]

— ० —

सप्तमः प्रकाशः

# अथ तिङन्ता निरूप्यन्ते

२८४ धातोर्हलन्तस्यादन्तो लोप्या विकरणाः क्वचित्।
अद्वा तिङ्यनदन्तेभ्यो गुणः सर्वत्र न क्वचित् ॥७।१॥

धातोरिति। हलन्तस्य धातोरन्ते अकार प्रयोक्तव्य.। भमइ [=भ्राम्यति] ॥ उवसमइ [= उपशाम्यति ॥ रुंधइ = [रुणद्धि] ॥ कुणइ [= करोति] ॥
५ किणइ [=क्रीणाति] ॥ हणइ [=हन्ति] ॥ हलन्तस्य किम्। होइ [=भवति] ॥ जंभाइ [= जृम्भते] ॥

लोप्या इति ॥ संस्कृते सिद्धरूपे प्राकृता शबादयो विकरणा निवर्त्त्या ॥ होइ [=भवति] ॥ रुंधइ [=रुणद्धि] ॥ सुणइ [=शृणोति] ॥ करइ [=करोति] ॥

क्वचिदिति किम्। जयइ [= जयति] ॥
१० अद्वेति। अदन्तभिन्नाजन्तेभ्यो धातुभ्यः अकारागमो वा स्यात्तिङि परे ॥ पाइ। पाअइ [प्राप्नोति] ॥ धाइ। धाअइ [= धावति] ॥ जभाइ। जभाअइ [= जृम्भते] ॥ विक्केइ। विक्केअइ [= विक्रीणाति] ॥ होइ। होअइ। [= भवति] ॥

अनदन्तेभ्य किम्। हसइ [= हसति] ॥ भमइ [= भ्राम्यति] ॥
१५ गुण इति सर्वत्र प्रत्ययमात्रेऽविषयेऽपि अजन्तस्य गुण स्यात्। नेइ [= नयति]। नेन्ति [= नयन्ति] ॥ नेऊण [= नीत्वा] ॥ जेऊण [जित्वा] ॥ सोऊण [= सुपित्वा] ॥ मोइस्स [= मोदिष्ये] ॥

नेति ॥ णीओ [= नीत] ॥ उड्डीणो [= उड्डीन] ॥७।१॥

२८५ ऋतस्त्वरः वृषादीनामरि दीर्घो रुषादिषु ॥
२० चि जि श्रु हु स्तु-लू-पू-धूञ्भ्यो णो ह्रस्वश्च वा क्वचित् ॥७।२॥

ऋत इति ॥ ऋकारस्य अर् इत्यादेश स्यात्। तकार उच्चारणार्थं ॥ करइ [=करोति] ॥ धरइ [=धरति]। हरइ [= हरति] ॥ तरइ [= तरति] ॥

वृषेति ॥ वृषादीनामृकारस्य अरि इत्यादेश स्यात् ॥ वरिसइ [=वर्षति] ॥ मरिसइ [= मर्षति] ॥ हरिसइ [= हृष्यति] ॥
२५ दीर्घ इति ॥ रूसइ [= रुष्यति] ॥ तूसइ [= तुष्यति] ॥ मूसइ

[ = मुष्णाति ] ॥ दूसइ [ दुष्यति ] । पूसइ [ = पुष्णाति ] ॥ इत्यादि-सदृशाः रुधादयः ॥

चिजीति ॥ चिञ् चयने इत्यादिभ्यो ण इत्यागमः स्यात् । धातोश्चाचो ह्रस्वः । चिणइ [ = चिनोति ] ॥ जिणइ [ = जिनाति ] ॥ सुणइ [ = शृणोति ] । हुणइ [ = जुहोति ] ॥ थुणइ [ = स्तौति ] ॥ लुणइ [ लुनाति ] ॥ पुणइ [ = पुनाति ] ॥ धुणइ [ = धुनोति ] ॥ ५

वेति ॥ एषु केषाचित् वा स्यात् ॥ उच्चिणइ । उच्चेइ [ = उच्चिनोति ] ॥ जयइ । जिणइ [ जयति ] ॥ जेऊण । जिणिऊण [ = जित्वा ] ॥ सोऊण । सुणिऊण [ श्रुत्वा ] ॥७।२॥

२८६ ओरवः स्याद् धातोस्तु खा-धैकत्वे सृजेः सिरः ॥ १०
द्वित्वमन्त्यस्य शक्-जिम्-लग्-मग्-कुप्-नश् पट्-लट्
त्रुटामटः ॥७।३॥

२८७ तुद् नट्-सिजादेश्च प्रादेर्वा मीलेर्वा चल-स्फुटोः ॥
दि दे स्तः प्रथमाद्यस्य वचनस्य कचित्त्विरे ॥७।४॥

ओ इति ॥ धातोरुवर्णस्यावादेशः स्यात् । निह्नुते [ = नण्हवइ ] ॥ च्यवते [ = चवइ ] ॥ रौति = रवइ ॥ प्रसूते = पसवइ ॥ १५

खा-धेति ॥ खाद भक्षणे । धा गतिशुद्ध्योः । अनयोः । क्रमात् खा धा इत्यादेशौ स्तः एकवचने परे ॥ खाइ [ = खादति ] । खाउ [ = खादतु ] ॥ खाहिइ [ = खादिष्यति ] ॥ धाइ [ = धावति ] । धाउ [ = धावतु ] । धाहिइ [ धास्यति ] ॥ २०

एकत्वे किम् । [ खादन्ति = ] खादंति ॥ [ धावन्ति = ] धावंति ॥

बाहुलकात्कचिन्न ॥ धावइ ॥

सृजेरिति । सृजधातोः सिर इत्यादेशः । निसिरइ । वोसिरइ [=व्युत्सृजति] ॥

द्वित्वमिति । सक्कइ [ = शक्नोति ] ॥ जिम्मइ [ = जेमति ] ॥ लग्गइ [ = लगति ] ॥ २५

प्रादेरिति ॥ पमिल्लइ । पमीलइ [ = प्रमिलति ] ॥

प्रादे किम् । मीलइ [ = मिलति ] ॥

वेति ॥ अनयोरन्त्यस्य वा द्वित्वं वा स्यात् ॥ चल्लइ । चलइ [=चलति ] ॥ फुट्टइ । फुटइ । [ = स्फुटति ] ॥

दिदे इति । तिङा प्रथमपुरुषैकवचनस्य स्थाने दि-दे इत्यादेशौ स्तः । हसइ [ हसति ] । वेवइ [ = वेपते ] ॥ होइ [ भवति ] ॥ क ग च— इति दलोपः । हसए । वेवए ॥ ३०

दकारोच्चारणं शौरसेन्यादौ श्रवणार्थम् ।। यथा

चित्ते चिहुट्टदि ण खुट्टदि सा गुणेसु
सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसुं ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे
भाणेण तुट्टदि चिरं तरुणा तरट्टी ।।

५ क्वचिदिति । प्रथमैकवचनस्य क्वचित् इरे इत्यादेश स्यात् ।।

सूसइरे गामचिक्खल्लो = शुष्यति ग्रामकर्दम ।।७।४।।

२८८ अदन्तादेव देसे स्तः इरे-न्ति-न्ते बहुष्विह ।
सिसेस्तो मध्यमस्यादेरित्था हच्च बहुष्विह् ।।७।५।।

१० अदन्तेति । योयमुक्तः प्रथमाद्यस्य दे-आदेशो यश्च मध्यमाद्यस्य से आदेशो वक्ष्यते तौ द्वावपि अदन्तादेव धातो स्त नान्यत इति नियम्यते ।। हसए ।। हससे ।।

अदन्तादेव किम् । होइ । होसि ।। ठाइ । ठासि [ = तिष्ठति । तिष्ठसि ] ।।

इरे इति ।। प्रथमपुरुष बहुवचनस्यैते त्रय स्युः ।। दोण्णि वि ण पहुप्पिरे बाहू = १५ द्वावपि न प्रभवतो बाहू ।। विच्छुहिरे विक्षुभ्यन्ति इत्यर्थः । होंति [=भवन्ति ] ।। वेवति [ = वेपन्ते ] ।। गज्जति ।।

गज्जंते खे मेहा वीहन्ते रक्खसाण च ।
उप्पज्जते कइहिअअसाअरे कव्वरअणाइ ।। =
गर्जन्ति खे मेघा विध्यन्ते राक्षसाना च ।
२० उत्पद्यन्ते कविहृदयसागरे काव्यरत्नानि ।।

सिसेरिति । म यमपुरुषेकवचनस्य सि से एतौ स्त ।। हससि । हससे । वेवसि । वेवसे ।। अदन्तादेव दे से स्त इति नियमान्न हसे । होसि । ठासि ।।

इत्थेति ।। इह मध्यमबहुवचनस्यैतो स्त. । हसित्था । हसह । वेवित्था । वेवह ।।

२५ सूत्रद्वय-सदश-पाठात् इत्था प्रथमैकवचनस्यापीष्यते । ज ज ते रोइत्था = यद्यत्ते रोचते ।

हचश्चकारो विशेषणार्थ ।।७।५।।

२८९ मि-बिन्दू उत्तमस्यादेः बहुत्वस्य तु मो मुमाः ।।
मौ परे त्वत आत्व वा इत्वा स्वे मो-मु मेषु वा ।।७।६।।

३० मीति ।। उत्तमपुरुषैकवचनस्यैतौ स्त । होमि । हसामि । वेवामि ।

बहुजाणुअ रूसिउ सक्कं शक्नोमि इत्यर्थ. । न मरं = न म्रिये इत्यर्थ ।।

बह्विति । अस्योत्तमस्य बहुवचनस्य एते स्यु ॥ हसामो । हसामु । हसाम । = [ हसामः ] ॥ तुवरामो । तुरामु । तुराम = त्वरामः ॥

माविति । उत्तमैकवचनादेशे मि-शब्दे परे आत्वं वा स्यात् । हसमि । हसामि ॥ जाणमि । जाणामि [ = जानामि ] ॥ लट्लोटोस्तु एत्वमपि वक्ष्यते ॥ हसेमि । जाणेमि ॥ अत किम् । होमि ॥ ५

इत्वेति । एषु परेषु अत इत्वमात्वं च वा स्यात् । पक्षे दन्तत्वमौत्सर्गिकम् । भणिमो । भणामो । भणमो ॥ पढमु । पढामु । हसिम । हसाम । हसम ॥

अत इत्येव । होमो । ठामो ॥७।६॥

२९० लट्-लोट् शतृषु वा एत्वं क्वचिच्चात्वं क्वचिच्च न ।
लट्-लिङ्-लोट्-लुट्-लृटां ज्ज-ज्जा वा स्तत एच्च तयोरतः ॥७।७॥ १०

लटिति । एषु परेष्वत एत्वं वा स्यात् । हसइ । हसेइ । हसति । हसम्मि । हसेसि । हससि । हसेमि । हसमो । हसेमो । हसामो । हसिमु । हसेमु । हसामु ॥ एवं हसेम इत्यादि ॥

लोट्—हसउ । हसेउ ॥ एवं सर्वत्र ॥

शतृ—हसन्तो । हसेन्तो ॥ १५

क्वचिदिति ॥ लडादौ अत आत्वमपि क्वचित्स्यात् । सुणाउ । सुणादु भवं [ श्रृणोतु भवान् ] । पक्षे सुणेदु । सुणदु ॥

क्वचिदिति ॥ एत्वमात्वं च क्वचिन्न स्यात ॥ जअइ । जअउ । जअन्तो ॥

लडिदि ॥ वर्तमानार्थलट विध्याद्यर्थयोश्च लिङ्-लोटोर्भविष्यदर्थयो. लुट्-लृटोश्च स्थाने ज्ज-ज्जा इत्यादेशौ स्तो वा तयोश्च परयोरत एत्वं च स्यात् । २० हसेज्जा । सुणेज्जा । सुणेज्ज । एवं सर्वपुरुषेषु सर्ववचनेषु च उदाहार्य्यम् ॥

पक्षे हसइ । सुणइ । हसति । हससि । हसित्था । हसमि । हसामि । हसिमो । हसामो । हसमो । हसिमु । हसमु । हसामु ॥ हसिम । हसम । हसाम । इत्यादि प्रागुक्तम् ।

एवं लिङादावपि ॥ हसेज्जा । हसेज्ज । हसेत् । हसतु । हसिता । हसिष्यति २५ इत्यर्थः ॥

अन्ये पुनः अहसत् । अहासीत् । जहास । हस्यात् । अहसिष्यत् ।
इति लङ्-लुङ्-लिट्-लिङ्-लृङामप्यर्थे अविशेषेणादेशा वाहु ॥७।७॥

२९१ अजन्तानां तु मध्येपि ज्ज ज्जा वास्तो लडादिषु ॥
लिङ्लोटोरेकवचमां क्रमात् उ सु मु हिश्च सौ ॥७।८॥ ३०

अजन्तेति । अजन्तानां धातूनां लडादिषु परेषु ज्ज-ज्जा इत्येतौ विकरणवन्मध्ये

वा स्त' ।। अपि शब्दाल्लङादीनां स्थानेपि वा स्तः ।। लटि— होज्जइ । होज्जाइ । होज्ज । होज्जा । पक्षे होइ । होज्जसि । होज्जासि । होज्ज । होज्जा ।। पक्षे होसि । होज्जमि । होज्जामि । होज्ज । होज्जा ।। पक्षे होमि ।।

एवं बहुवचनेऽप्युदाहार्य्यम् ।।

५ लिङ्लोटो —होज्जउ । होज्जाउ । होज्ज । होज्जा । पक्षे होउ । भवतु । भवेद्वा इत्यर्थं ।।

एवं पुरुषान्तरे वचनान्तरेपि ।।

लुट्-लृटो.—होज्जहिइ । होज्जाहिइ । होज्ज । होज्जा । पक्षे होहिइ ।। भविता भविष्यति वा इत्यर्थ. ।।

१० एव पुरुषान्तरे वचनान्तरेपि ।।

अजन्ताना किम् । हसेज्ज । हसेज्जा । तुवरेज्ज । तुवरेज्जा ।।

लिङिति ।। प्रथमपुरुषाद्येकवचनाना क्रमादेत त्रय स्यु ।। दि-दे-सि-से मो-मु-मानामपवाद ।। कगच—इत्यादिना द्-लोप. ।। होउ । हसउ ।। एव हसेत् भवेत् इत्यर्थ । दकारोच्चारण शौरसेन्याद्यर्थम् ।। एदु एदु पिअसखी

१५ [ = एतु एतु प्रियसखी ] ।। हससु तुम [ = हस त्वम् ] ।।

इत्वात्वे मो-मु-मे-पु वा ।। हसिमु । हसामु अह [ = अह हसेम् ] ।।

हिश्चेति ।। मध्यमकवचनादेशस्य सोर्विषये हि स्यात् । चकारात्सुरपि ।। होहि । होसु । देहि । देसु ।।७।८।।

२९२ अतः परस्य सेस्त्विज्जस्विज्जहीज्जेलुकस्तु वा ।।

२० बह्वर्थाना तु वचसां लिङ्लोटोन्तुहमो क्रमात् ।।७।९।।

अदन्तात्परस्य मध्यमैकवचनस्य स्थाने इज्जसु-इज्जहि-इज्जे लुक् चादेशा वा स्यु. ।। तुम हसेज्जसु [ = त्व हसे ] हसेज्जेहि । हसेज्जे । हसअइए । इत्येव पक्षे हससु ।।

अत किम् । होसु । ठासु ।।

२५ बह्विति । लिङ्लोटोर्बहुवचनाना स्थाने क्रमात् न्तु-ह-मो इत्यादेशा स्यु ।। हसतु । हसह । हसामो । हसिमो । हसेयु. । हसेत । हसेम इत्यर्थं ।। एव तुवरतु । तुवरह । तुवरामो । तुवरिमो ।।

लोटोप्येतान्येव रूपाणि ।। किन्तु लट्-लोट्-शतृषु वा एत्वम् इत्येत्वं विशेष ।। तद्यथा । हसेउ । हसउ । हसेंतु । हसतु ।।

३० मध्यमस्यैकत्वे हसेसु । हससु । हसेहि । हसहि । हसेज्जसु । हसेज्जहि । हसेज्जे । हसे ।।

बहुत्वे हसेह । हसह ॥

उत्तमैकत्वे—हसेमु । हसमु ॥

इत्वात्वे मो-मु-मेषु वा इत्यात्वेत्वम् अपि —हसिमु । हसामु । हसेमा । हसिमो । हसमो । हसामो ॥

यदा तु लट्-लिट्-लोट्-लुट्-लृटां ज्ज ज्जा वा स्त एच्च तयोरतः इति प्रवर्तते तत्र पक्षे हसेज्ज । हसेज्जा ॥ ५

एव सर्वपुरुषवचनेषु ॥

अजन्तानां तु मध्येपि ज्जे ज्जा वा स्तो लडादिषु इति पक्षे होज्जइ । होज्जाउ । होज्ज । होज्जा । होज्ज तु ज्जा-पक्षेपि सयोगे ह्रस्वता इति ह्रस्व ॥ होज्जसु । होज्जासु । होज्जहि । होज्जाहि । होज्ज । होज्जा । होज्जह । होज्जाह । १० होज्ज । होज्जा । होज्जमो । होज्जामो । होज्ज । होज्जा ॥७।९॥

२९३ लिडादेशस्य ज्जस्याग्रे इकारो वा प्रयुज्यते ॥

स्वराल्लङ् लुङ्-लिटां सी-ही हीअ ईअ हलन्ततः ॥७।१०॥

लिडेति ॥ होज्जइ । होज्ज ॥ भवेदित्यर्थ ॥ एव सर्वपुरुषवचनेषु ॥

स्वरादिति । स्वरान्ताद्धातो परेषामेषामेकैकस्य त्रयः स्यु सर्वपुरुषवचनेषु १५ अविशेषात् ॥ कासी । काही । काहीअ । अकरोत् ॥ अकार्षीत् । चकार इत्यर्थ । ठासी । ठाही । ठाहीअ ॥ होही । होहीअ सा तुम अह वा ॥

ईअ इति ॥ हलन्तात् लडादे ईअ इत्यादेश स्यात् । हुवीअ । अभवत् । अभूत् । बभूव इत्यर्थ ।

एव हसीअ । गण्हीअ ॥७।१०॥ २०

२९४ धातोरत इदेच्च स्याल्लुट्-लृट्-क्त्वा-तव्य तुमुषु च ।

धातोर्हि लुट्-लृटोर्वा तु स्साहास्तोभि ममोमुषु ॥७।११॥

धातोरिति । लुडादिषु परेषु अत इत्वमत्व च पर्यायेण स्यात् ॥ हसिहिअ । हसेहिअ । हसिऊण । हसेऊण । हसिअव्व । हसेअव्व । हसिउं । हसेउं ॥

अत. किम् । होहिइ । काहिइ । काऊण ॥ २५

धातोर्हीति ॥ लुट्-लृटो' परयोर्धातो परो हि-विकरण स्यात् । होहिइ । भविता । भविष्यति ॥ होहिति । होहिसि । होहित्था ॥ एव हसिहिइ । हसेहिइ । काहिइ ॥

उत्तमे तु—वा स्विति ॥ उत्तमादेशेषु एषु परत स्सा-हा इत्येतौ स्त ॥ पक्षे हिरपि ॥ होस्सामि । होहामि । होस्साम । होहाम । होस्सामो । होहामो । ३० होस्सामु । होहामु ॥ पक्षे होहिमि इत्यादि [ = भविष्यामि ] ॥७।११॥

२९५ मेः स्सं वा वा कृदो हं वा हिस्सा-हित्था म-मो-मुषु ।
उजज्जा लृङः सर्वपुरुषवचनेष्वत एत्तयोः ॥७।१२॥

मेरिति । लुट्लृटोरुत्तमैकवचनादेशस्य मे स्थाने स्सं इत्यादेश स्याद्वा ॥ अह होस्स । हसिस्स । हसेस्स [ = हसिष्यामि ] ॥ कित्तइस्सं कीर्तयिष्यामीत्यर्थ. । पक्षे होहिमि । होस्सामि । होहामि । कित्तइहिमि ॥

५

वेति । कृञो दाञश्च परस्य लुट्लृडादेशस्य मे हं इत्यादेश स्याद्वा । काहं । दाह । करिष्यामि । दास्यामि इत्यर्थ । पक्षे काहिमि । काहिस्सामि । काहामि । दाहिमि । दास्सामि । दाहामि ॥

वा हीति ॥ षष्ठ्यर्थे सप्तमी । लुट्-लृटोरुत्तमपुरुषबहुवचनादेशानामेषा-
१० मेतौ वा स्त । होहिस्सा । होहित्था ॥ पक्षे होहिम । होस्साम । होहाम ॥ एव हसिहिस्सा । हसेहिस्सा । हसिहित्था । हसेहित्था ॥

ज्ज-ज्जादेशपक्षे तु हसेज्ज । हसेज्जा ॥ सो दे तुम तुम्हे । अह अम्हे वा । एव पठेज्ज पठेज्जा ॥ अजन्तानान्तु होज्जहिइ । होज्जाहिइ । होज्जा । होज्ज ॥ पक्षे हसिहिइ । हसेहिइ । होहिइ । इत्यादि ॥

१५ ज्जज्जेति ॥ लृङ. सर्वपुरुषवचनाना स्थाने ज्जज्जा इत्यादेशौ स्त ॥ तयोश्च परयोरत एत्व वा स्यात् । होज्ज । होज्जा । अभविष्यदित्यर्थ. ॥ हसेज्ज । हसेज्जा ॥७।१२॥

२९६ न्तमाणावपि तस्य स्तोस्तेः स्यादत्थि तिबादिभिः ॥
सिर्वा सि सेभ्या म्हि-म्हो-म्हा वा मिमो मा क्रमान्न मुः ॥७।१३।

२० न्तमाणेति ॥ तस्य लृङ स्थाने सर्वत्र न्तमाण इत्येतावादेशौ स्त ॥ होन्तो । होमाणो ॥ अभविष्यत् । अहसिष्यदित्यर्थ ॥

अस्तेरिति ॥ तिबादिभिर्विभक्तिभि सहितस्यास्ते स्थाने अत्थि इत्यादेश स्यात् ॥ अत्थि सो राआ [ = अस्ति स राजा ] ॥ अत्थि राआणो [ = सन्ति राजान ] ॥ अत्थि तुम तुम्हे ॥ [ = असि त्वम् । स्थ यूयम् ] ॥ अह अम्हे वा
२५ [ अहम् वयम् वा ] ॥

सिर्वेति ॥ मध्यमपुरुषैकवचनादेशाभ्या सि-सेभ्या सहितस्यास्ते स्थाने सिरादेशो वा स्यात् ॥ णिच्चिंतो दाणि सि तुम=निश्चिन्त इदानीमसि त्वम् ॥ पक्षे अत्थि तुम ॥

म्हीति ॥ उत्तमैकवचनादेशेन मिना सहितस्यास्ते म्हि बहुवचनस्यादेशेन
३० मो इत्यनेन सहितस्य म्हो इत्यनेन सहितस्य तु म्ह इत्यादेशो वा स्यात् ॥ एसम्हि ॥ एषास्मि ॥ गअम्हो = गता स्म ॥ अत्थि अह । अत्थि अम्हे ॥

न मुरिति ॥ उत्तमबहुवचनस्य विहितो मु. अस्तेर्न प्रयोक्तव्यः ॥ तथा नोदाहृतम् ॥

एव लिङ्लोटो लुट् लृट्-लेट्-लृङ्क्ष्वपि रूपाणि ज्ञेयानि ॥७।१३॥

२९७ लङ्-लुङ् लिड्भिस्तु सहितस्यास्तेरासि अहेसि च ।
श्रुवः सोच्छ गमेर्गच्छ रुदेरोच्छ दृशेर्दच्छ ॥७।१४॥ ५

२९८ विदेर्वेच्छ मुचेर्मोच्छ वचेर्वोच्छ च लुट्-लृटोः ।
छिदेर्छेच्छ भिदेर्भेच्छ भुजेर्भोच्छ हि लुक् च वा ॥७।१५॥

लङिति ॥ लिङाद्यन्तस्यास्तेरेतौ स्त । आसि सो राआ राआणो तुम तुम्हे अह अम्हे वा आसीत् ॥ अभूत बभूवेत्यर्थः ॥ एवम् आसम् । आसी । आस्त । आसम् । आस्म इत्याद्यर्थेपि योज्यम् ॥ १०

अहेसि सो ते तुम तुम्हे अह अम्हे इत्यादि ॥

शेष लडवत ॥

श्रृणोते लटि सुणइ । सुणेइ । सुणए । सुणति ॥ सुणते । सुणिरे । सुणसि । सुणेसि । सुणित्था । सुणह । सुण । सुणेमि । सुणामि । सुणमि । सुणिमो । सुणामो । सुणेमो । सुणिमु । सुणमु । सुणेमु । सुणिम । सुणाम । १५ सुणेम ॥

ज्ज ज्जादेशपक्षे तु सुणेज्ज । सुणेज्जइ । सुणेज्जा ॥

एव सर्वपुरुषवचनेपु । लिङि सुणउ सा । लिङ्लोटोरेकवचसा क्रमाद् दु-सु मु हिश्च सो इति सूत्रेण यात इत्यस्य -आदेश ॥ सुणउ सा = श्रृणुयास्सा इत्यर्थे ॥ २०

क्वचिदात्वम् सुणाउ । सुणतु । सुणसु । सुणेज्जसु ॥ सुणेज्जहि । सुणेज्जे सुण वा तुम ॥ सुणह तुम्हे । सुणिमु । सुणामो सुणिमो ॥

लोटोप्येवम् । अन्य विशेष । सुणउ । सुणाउ । सुणेतु सुणंतु ॥ इत्यादि ॥

उभयत्र ज्ज-ज्जादेशपक्षे सुणेज्ज सुणेज्जा इत्यवशिष्टम् ॥ सर्वपुरुष-वचनेपु । लङ्-लुङ्लिटसुत् ईअ हलन्तत सुणीअ सो = अश्रृणोत् । अश्रौषीत् २५ शुश्राव वा ॥ एव सर्वपुरुषवचनेषु ॥

लुट्-लृटोस्तु—सुणिहिइ । सुणिहिति । सुणिहिमि । सुणिहित्था । सुणिहिइ । सुणिहिमि । सुणिस्सं । सुणिस्सामि । सुणिहामि ॥

बहुवचने तु सुणिहिमो । सुणिस्सामो । सुणिहामो । सुणिहिस्सा । सुणिहित्था ॥ दि दे स्त प्रथमाद्यस्य इति सूत्रेण ता इत्यस्य स्थाने दि इत्यादेश । सोच्छिइ ३० श्रोता इत्यर्थः । एवमुभयोरप्यूह्यम् ॥

एत्वपक्षे सुणेहिइ इत्यादि ॥

ज्ज-ज्जादेश-पक्षे तु सुणेज्ज सुणेज्जा ॥

इत्येव सर्वत्र । लृङ्प्येवम् ॥ न्तमाणयो पक्षे सुणतो । सुणमाणो अश्रो-ष्यत् इत्यर्थ ॥

५ लुट्लृटोरपरो विशेष ॥

श्रुव इति ॥ लुट्लृटो परयो श्रणोत्यादीना सोच्छादय आदेशा वा स्यु । तेषु कृतेषु लुट्-लृटोर्हि इति विहितस्य हेर्लोपश्च वा स्यात् ॥ सोच्छिइ । सोच्छिहिइ । सोच्छिंति । सोच्छिहिंति । सोच्छिसि । सोच्छिहिसि । सोच्छित्था । सोच्छिहित्था । सोच्छिह । सोच्छिहिह । सोच्छिमि । सोच्छिहिमि । सोच्छिस्सामि ।
१० सोच्छिहित्था ॥

एवमुभयोरपि ॥ गच्छिइ । गच्छिहिइ ॥ गच्छिंति । गच्छिहिंति । गच्छिसि । गच्छिहिसि । गच्छित्था । गच्छिहित्था । गच्छिहिह । गच्छिमि । गच्छिहिमि । गच्छिस्सामि । गच्छिहामि । गच्छिस्स । बिन्द्वादेशे गच्छ । गच्छिमो । गच्छिहिमो । गच्छिस्सामो । गच्छिहामो । गच्छिस्सा । गच्छित्था ॥ एवमुभयोरपि ।

१५ एव रुदादीनामप्युस्रेयम् ॥

पक्षे सुणिहि इत्यादि प्रागेवोदाहृतम् ॥ ७ । १५ ॥ )

२९९ नामधातुषु तु प्रायः क्यङ्-क्यषोर्वा य-शब्द-लुक् ॥

णेः स्याददेदावआवे न ज्ञादेरेत् क्वचिच्च नात्र ॥७।१६॥

नामेति । अनयोर्य शब्दलोप. स्यात् । गुरुकायते = गुरुआइ ॥ पक्षे यमा-
२० ग्रलोप । गुरुआअइ ॥ क्यष्—लोहिआइ । लोहिआअइ [ =लोहितायते ॥

णेरिति । धातोर्णि प्रेरण इति विहितस्य णे स्थाने चत्वार एते आदेशा स्यु ॥ दरिसइ । दरिसेइ । दरिसावइ । दरिसावेइ [ = दर्शयति ] ॥ कारइ । कारेइ । करावइ करावेइ । [=कारयति] ॥ सुणइ । सुणेइ । सुणावइ । सुणावेइ । [=श्रावयति] ॥ कारति । करेति । करावति । करावेति इत्यादि पूर्वप्रक्रियोऽन्नेया ॥

२५ नेति । ज्ञा अवबोधने । इत्यादे परस्यणेरेत्व न स्यात् ॥ जाणइ । जाणावइ । [ = जानाति । ज्ञापयति ] ॥

क्वचिदिति ॥ क्वचित् णेराव न स्यात् ॥ पावइ । पावेदु । प्रापयति । [ प्रापयतु ] ॥ भावइ । भावेइ [ = भावयति ] ॥७॥१६॥

३०० गुर्वादेर्णस्त्वविर्वा स्यात् भ्रमेर्ण्यन्ते भमाड वा ।
३० भावकर्मार्थेषु तिङ्क्षु क्ते च स्यादावि लुक् च णेः ॥६।१७॥

गुर्वादेरिति ॥ सोसविअ । सोसिअ = शोषितम् ॥ तोसविअ । तोसिअं = तोषितम् ॥

भ्रमेरिति ॥ ण्यन्तस्य भ्रमेः स्थाने वा भमाड इत्यादेशः स्यात् । भमाडइ । भमाडेइ ॥ पक्षे भामेइ । भमाडेइ । भमावइ ॥

भावेति ॥ णे आवि इत्यादेशः स्यात् । पक्षे लुक् । कारीअइ । करावीअइ । कारिज्जइ । कराविज्जइ ॥ हासीअइ । हसावीअइ । हासिज्जइ । हसाविज्जइ ॥

क्ते—कारिअं । कराविअं [ =कारितम् ] ॥ खामिअं । खमाविअं [ = क्षमापितम् ] ॥ ६ । १७ ॥ ५

३०१ अत आत्वमदेल्लुक्षु आतोचावावादिषु क्वचित् ।

ईअ-इज्जौ यको वास्तो डीस-वुच्चौतु दृशूवचोः ॥७।१८॥

अत इति ॥ णे स्थाने विहितेषु अत्-एत्-लुक् एषु कृतेषु धातोरत आत्वं स्यात् ॥ कारइ । कारेइ । कारिअं । हासइ । हासेइ । हासिअं । ससामइ । १० ससामिअँ ॥

आतो इति । आव आवे आवि इत्येषु तु परेषु धातोरत आत्व च स्यात् । क्वचिग्रहणं प्रयोगानुसारार्थम् । तेन अवादेशे नित्यम् ॥ करावइ । उवसमावइ ॥ आवेआव्योस्तु वेच्छन्ति ॥ करावेइ । कारावेइ । कराविअं काराविअं ॥ हसावइ । हासावइ । हसाविओ । हासाविओ ॥ सिद्धरूपापेक्षयोपधाकारस्यात्वं विधीयते ॥ १५

आतः किम् । तोसवइ [ = तोषयति ] ॥ दूसवइ [ = दूषयति ] ॥

ईएति ॥ भावकर्मणोर्विहितस्य यकः स्थाने एतावादेशौ वा स्तः ॥ हसीअइ । हसिज्जइ । हस्यते ॥ करीअइ । करिज्जइ ॥

पक्षे मए नवेज्ज न वज्जेज्ज । तेण लहेज्ज । लहेहिज्ज ॥

डीसेति ॥ अनयोरेतौ क्रमात्स्त । डित्वात् टिलोप ॥ दीसइ [ = दृश्यते ] । २० वुच्चइ [ = उच्यते ] ॥

ईअ-इज्जयोरपवाद ॥ ७ । १८ ॥

३०२ द्विरुक्तो वो जि-श्रु-हु स्तु-धू-पू ल्वा वात्र लुक् यकः ॥

चेऽर्वा म्म व्वश्च खनूहन्योर्म्मोन्त्यस्य बहुल हनः ॥७।१९॥

द्विरुक्तो इति । ज्यादीना द्विरुक्तो वकारोन्त आगमो वा । तत्र च कृते यको २५ लुक् स्यात । यक्-प्रकरणाद् भावकर्मणोरिति गम्यते ॥ पक्षे यथाप्राप्तौ ईअ-इज्जौ । जिव्वइ । जिणीअइ । जिणिज्जइ ॥ [ = जीयते ] सुव्वइ । सुणीअइ । सुणिज्जइ ॥ [=श्रूयते] ॥ हुव्वइ । हुणीअइ । हुणिज्जइ ॥ [=हूयते] ॥ थुव्वइ । थुवीअइ । थुविज्जइ ॥ [स्तूयते] ॥ धुव्वइ । धुणीअइ । धुणिज्जइ [ =धूयते ] ॥ पुव्वइ । पुणीअइ । पुणिज्जइ [ = पूयते ] ॥ लुव्वइ । लुणीअइ । लुणिज्जइ ३० [ = लूयते ] ॥

लिङ्-लोटो' जिव्वउ । जिव्वेउ । जिव्वेज्ज । जिव्वेज्जा ।।
लङ्-लुङ्-लिट्सु तु जिव्वीअ ।
लुट्लृटोस्तु जिव्विहइ । इत्यादि ।।
पुरुषान्तरे वचनान्तरे चोह्यम् ।।

५ चेवेति ।। चिञ् चयने इत्यस्य द्विरुक्तौ मकारवकारावागमौ वा स्तः । तत्र यको लुक् च ।। चिम्मइ । चिव्वइ । पक्षे चिणीअइ । चिणिज्जइ ।।

खन्निति । अनयोरन्त्यस्य द्विरुक्तौ मो वा स्यात् यको लुक्च ।। हम्मइ [ = हन्यते ] ।। खम्मइ [ = खन्यते ] ।। पक्षे – हणीअइ । हणिज्जइ ।। खणीअइ । खणिज्जइ ।। खनिहिइ । खणिहिइ ।।

१० बहुलमिति । हन्तेर्म्मान्तादेशो बहुलं स्यात् । भावकर्मणोरुक्त ।। क्वचित्कर्त्र्यपि ।। हम्मइ । हन्तीत्यर्थ ।। क्वचिन्न भवति ।। हतव्व । हतूण हओ ।।७।१९।।

३०३ दुहेर्दुब्भ लिहेर्लिब्भ वहेर्वुब्भ निपात्यते ।
हस्य ब्भः अत उत्व च वा वहेर्वा निपात्यते ।।७।२०।।

दुहेरिति । भावकर्मणोर्वा यको लुक् इत्याप्रकारणान्तमनुसन्धेयम् । अनेक-

१५ वर्णादेशादन्यत्रान्त्यस्य च इति ।। दुब्भइ । दुह्यत इत्यर्थ ।। पक्षे—दुहिज्जइ [ दुह्यते ।

लिहेरिति । लिब्भइ । लिहिज्जइ [ लिह्यते ] ।।
वहेरिति ।। वुब्भइ । वहिज्जइ [ ऊह्यते ] ।।७।२०।।

३०४ रुधे रुब्भाथ समुपानुभ्यो रुज्झेत्यपीष्यते ।।

२० बन्धेर्बज्झ दहेर्डज्झ वाहिप्प व्याहृञः स्मृतः ।।७।२१।।

रुधेरिति ।। रुब्भइ । रुहिज्जइ ।।

अथेति ।। संरुज्झइ ।। उवरुज्झइ । अणुरुज्झइ ।। पक्षे संरुब्भइ । संरुधिज्जइ ।। इत्यादि ।।

बन्धेरिति । बज्झइ । बधिज्जइ ।

२५ दहेरिति । डज्झइ । डहिज्जइ ।।

वाहिप्पेति । वाहिप्पइ । वाहरिज्जइ । व्याह्रियत इत्यर्थः ।।७।२१।।

३०४ द्विरन्त्यो गम-हस-रुव भण्-लभ्-कथ-भुज्-स्पृशाम् ।
वृ ज्-हृ-कृ-श्रृताभीरः सिप्पः स्निह्-सिचोः स्मृतः ।७।२२।।

द्विरन्त्येति ।। गमादीनामन्त्यो वर्णो द्विरुच्यते ।। वा यको लुक् च ।। गम्मइ ।

३० हस्सइ ।।

रुवेति कृतवान्तादेशो रुदिर्निर्दिश्यते ।। रुव्वइ । [ = रुद्यते ] भण्णइ

